गुलकीकृत्य तत्कण्ठे बद्धा पश्चात्तु योजयेत् ।
एतद्दर्शनमात्रेण पलायन्ते दिशो दश ॥९८॥
निर्जीवेषु च तद्यन्त्रं जयमाप्नोति सर्वतः ।
नासाध्यं विद्यते तेन वज्रयन्त्रेण पार्वति ! ॥९९॥
ध्यायेद्वक्त्रे रिपोर्यन्त्रं विद्यां वा लोहिताकृतिम् ।
तदैव दासवत्तस्य वशो भवति तद्बलात् ॥१००॥
इति ते विजयानित्यावैभवाः स्युः समीरिताः ।
नैवतत्त्वमयी व्याप्तिरिति सम्यक् समीरिता ॥
अस्या निष्कालनाच्चित्ते तत्तत्त्वं स्वात्मसात्कृतम् ॥१०१॥

इति षोड़शनित्यातन्त्रेषु श्रीकादिमतेऽष्टादशं
पटलं परिपूर्णं परामृष्टम् ॥१८॥

---

शब्दः ॥ ९६ ॥ ९७ ॥ तत्कण्ठे—कुक्कुटादिकण्ठे ॥ ९८ ॥ जयमाप्नोति—दधज्जन इति शेषः ॥ ९९ ॥ विद्यां मूलविद्यां वाविकल्पेन। लोहिताकृतिमिति यन्त्रस्यापि विशेषणं तदा लोहिताकृतीत्यन्वेति। तस्य—धातुः। भवति रिपुरिति शेषः। तद्बलात्—ध्यानबलात्। उक्तप्रकारतः ॥ १०० ॥

इति श्रीषोड़शनित्यातन्त्रेषु श्रीकादिमताख्यस्य तन्त्रस्य परिपूर्णस्य तन्त्रस्य
प्रपञ्चसारसिंहराजप्रकाशाभिधानेन श्रीसुभगानन्दनाथेन विरचितायां
मनोरमाख्यायां व्याख्यायां शिवदूतीनित्याविद्याविधान-
प्रकाशनपरमष्टादशपटलं परिपूर्णं
परमामृष्टम् ॥ १८ ॥

ग्रन्थसङ्ख्या—
यन्त्राणि द्वादश व्याख्याग्रन्थास्त्वष्टादशं शतम् ।
सार्द्धपादत्रिपादोर्द्ध्वद्वानवत्यायुतं स्मृताः ॥

---

